'मास्टर' मणिमालायाः २३३ संख्यको मणिः
( कर्मकाण्डविभागे ३९ )

# कूपोत्सर्गपद्धतिः

## भाषाटीकासहिता



सम्पादकः—



ज्यौ० आ०-ती० पं० श्रीसीतारामझा

प्रथमं संस्करणम् ] सन् १९५३ ई० [ मूल्यम् =)॥

# अथ कूपोत्सर्गपद्धतिः ।

## [ भाषाटीकासहिता ]

---

कृतनित्यक्रियो यजमानः—प्रथमं❀पञ्चोपचारैः†पञ्चदेवतापूजां ततो विष्णुपूजां कृत्वा कलशस्थापनं कुर्यात् ।

यजमान स्नानादि नित्यक्रिया करके पहिले पञ्चोपचार से पञ्चदेवतापूजा फिर विष्णुपूजा करके कलश स्थापन करै !

कलशे तीर्थानावाहयेत्, यथा—

कलश में नीचे लिखे मन्त्रों से तीर्थों का आवाहन करै, यथा—

ॐ गङ्गाद्याः सरितः सर्वाः समुद्राश्च सरांसि च ।
आयान्तु यजमानस्य दुरितक्षयकारकाः ॥

---

❀ १ पाद्यार्घं०, २ चन्दन, ३ अक्षत, ४ पुष्प, ५ नैवेद्य ये पञ्चोपचार कहलाते हैं ।

† पञ्चदेवतापूजनविधि—ॐ सूर्यादिपञ्चदेवता इहागच्छत, इह तिष्ठत; ( इस प्रकार आवाहन कर ) एतानि पाद्यादीनि एषो ऽर्घः ॐ सूर्यादिपञ्चदेवताभ्यो नमः ३ । इदमनुलेपनं०, इदमक्षतं०, इदं पुष्पम्०, एतानि गन्ध-पुष्प-धूप-दीपताम्बूल-यथाभागनैवेद्यानि०, इदमाचमनीयं०, एष पुष्पाञ्जलिः ॐ सूर्यादि० ।

तिल लेकर—'ॐ भगवन् विष्णो इहागच्छ, इह तिष्ठ, एतानि पाद्यादीनि एषोऽर्घः०, इदमनुलेपनं०, एते तिला०, इदं पुष्पम्०, इदं तुलसीदलम्०, एतानि गन्धपुष्प०··· इदमाचमनीयम्०, एष पुष्पाञ्जलिः ॐ भगवते श्रीविष्णवे नमः··· ।'

( इति तीर्थानि विन्यस्य कलशकण्ठे वस्त्रं बध्नीयात्, पुष्पमालादिभिर्भूषयेत्। ततः सर्वौषधीः पञ्चरत्नम्, आम्रपल्लवं च क्षिपेत्। ततः कुशाक्षयतिलजलानि आदाय सङ्कल्पं कुर्यात्, यथा )—

इस प्रकार ऊपर के मन्त्र से तीर्थ का न्यास कर कलश के कण्ठ में वस्त्र लपेट कर फूल माला से अर्चित कर कलश में सर्वौषधी, पञ्चरत्न, आम्रपल्लव देकर तिल जल कुश हाथ में लेकर संकल्प करै। जैसे—

ॐ अद्य ❀ कर्तव्य-कूपजलाशयोत्सर्गयज्ञाविघ्नपरिसमाप्तिकामः† साधिदेवत-सप्रत्यधिदेवत-विनायकादिपञ्चकसहितान् नवग्रहान् दशदिक्पालकांश्चाहं पूजयिष्ये।

इति सङ्कल्पं कुर्यात् ( इस प्रकार संकल्प करै )

ततो यजमानः उत्थाय पूर्वाभिमुखोऽञ्जलिं बध्वा

---

कलश रखने के स्थान में—( ॐ कलशाधारशक्ते इहागच्छ, इह तिष्ठ ) इस प्रकार आवाहन कर के—'ॐ कलशाधारशक्तये नमः' इस वाक्य से पाद्यादि पञ्चोपचार से पूजन करके कलशस्थापन करै।

कोई—कलशस्थापन के बाद कलश पर शान्ति कलश गणेश के आवाहन करके पाद्यादि पञ्चोपचार से पूजा करते हैं।

❀ स्त्री या शूद्र यजमान हो तो 'ॐ के स्थान में "नमोऽद्य" पढ़े।

† स्त्री यजमान हो तो "प्राप्तिकामा" पढ़े।

पठेत् ( फिर यजमान उठ कर पूर्वाभिमुख हाथ जोड़ कर नीचे लिखे मन्त्र पढ़े )

ॐ त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च।
ब्रह्मविष्णुशिवैः सार्धं रक्षां कुर्वन्तु मे सदा॥
देवदानवगन्धर्वा यक्षराक्षस-पन्नगाः।
ऋषयो मानवो गावो देवमातर एव च॥
सर्वे ममाध्वरे रक्षां कुर्वन्तु च मुदान्विताः।

ततः पूजामारभेत् तत्र क्रमः ( ऊपर के मन्त्र पढ़ कर पूजा आरम्भ करें, इसका क्रम यथा—हाथ में अक्षत लेकर )।

ॐ भूर्भुवःस्वर्विनायक इहागच्छ इह तिष्ठ।

इत्यावाह्य ( इस प्रकार आवाहन कर ) जल लेकर।

एतानि पाद्यादीनि एषोऽर्घः ॐ विनायकाय नमः

चन्दन आदि लेकर—

इदमनुलेपनं ॐ विनायकाय नमः ३। इदं सिन्दूरं ॐ विनायकाय नमः ३। इदमक्षतं ॐ विनायकाय नमः ३। इदं पुष्पं०, इदं दूर्वादलं-इमे यज्ञोपवीते बृहस्पतिदैवते ॐ विनायकाय नमः। इदं वस्त्रं बृहस्पतिदैवतं ॐ विनायकाय नमः।

जल लेकर।

एतानि गन्धपुष्प-धूपदीपताम्बूल-यथाभाग-नैवेद्यानि ॐ विनायकाय नमः । इदमाचमनीयं ॐ विनायकाय नमः ।

दोनोंहाथ से फूल लेकर ।

एष पुष्पाञ्जलिः ॐ विनायकाय नमः ।

फूल चढ़ा कर प्रणाम करै ।

अनेनैव क्रमेण—सूर्य-चन्द्र-मङ्गल-बुध-बृहस्पति-शुक्र-शनि-राहु-केतून् सहैव पृथक् वा पञ्चोपचारैः पूजयेत् ।

( इसी प्रकार सूर्य आदि नवग्रह का एक साथ या पृथक् पृथक् आवाहन कर पञ्चोपचार से पूजा करें । ) एक साथ नवग्रह पूजा प्रकार—यथा—

ॐ साधिदैवत-सप्रत्यधिदैवत-विनायकादिपञ्चकसहित-सूर्यादिनवग्रहा इहागच्छत, इह तिष्ठत । एतानि पाद्यादीनि एषोऽर्घः ॐ साधिदैवत-सप्रत्यधिदैवत-विनायकादिपञ्चकसहित-सूर्यादिनवग्रहेभ्यो नमः । इदमनु० । इदमक्षतं० । इदं पुष्पं० । एतानि गन्ध-पुष्प-धूपदीप० । इदमाचमनीयम्० । एष पुष्पाञ्जलिः० ।

ततः—त्र्यम्बक-उमा-स्कन्द-ब्रह्म-विष्णु-इन्द्र-यम-काल-चित्रगुप्तान् पूजयेत् ।

( नवग्रह पूजा के बाद—त्र्यम्बक, उमा, स्कन्द, ब्रह्मा, विष्णु, इन्द्र, यम, काल और चित्रगुप्त की पञ्चोपचार से पूजा करै ।

ततः—अग्नि-अप्-पृथिवी- विष्णु-इन्द्र-शाची-प्रजापति-सर्प-ब्रह्मणः पूजयेत् ।

( फिर-अग्नि-अप्-पृथिवी-आदि देवताओं को पृथक् आवाहन कर पञ्चोपचार से पूजा कर । अप् के आवाहन में—'ओं आपः इहागच्छत, इह तिष्ठत' इस प्रकार वाक्य पढ़े । तथा—'अद्भ्यो नमः' कह कर जल-चन्दनादि चढ़ावै ।

ततः—गणपति-दुर्गा-वायु-आकाशाश्विनीकुमारान् पूजयेत् ।

( उसके बाद गणपति-दुर्गा-वायु-आदि देवताओं की पूजा करै )

ततः इन्द्राग्नि-यम-निर्ऋति-वरुण-वायु-कुबेरेशानानन्त-ब्रह्मणः पूजयेत् ।

( फिर-इन्द्र-आदि-दशदिक्पाल की एक साथ या पृथक् पृथक् आवाहन कर पूजा करै । एक साथ पूजा करने में—ॐ इन्द्रादि दशदिक्पाला इहागच्छत इह तिष्ठत, एतानि०—'ॐ इन्द्रादिदशदिक्पालेभ्यो नमः' इस प्रकार वाक्य जोड़ै ॥

ततो यजमानः—कूपस्य-ऐशान्यां दिशि क्षेत्रपालं पूजयित्वा, हस्तमात्रं खातं खानयित्वा तन्मध्ये पञ्च-

रत्नादिकं दत्वा जलाशयसम्मुखं कृत्वा यूपमारोपयेत् । खातमापूर्य यूपं पञ्चोपचारैः पूजयेत् ।

( फिर यजमान कूप के ईशान भाग में क्षेत्रपाल की पूजा करके वहीं १ हाथ गहिरा खात बना कर उस में पञ्चरत्न ( या द्रव्य ) छोड़ कर यूप ( मनुष्याकार काष्ठका बना हुआ ) को जलाशयाभिमुख करके गाड़ै । तथा उस यूपका पञ्चोपचार से पूजा करै )

ततः कूपसमीपे गत्वा वरुणमभिमन्त्रयेदनेन ।

( फिर कूप समीप में जाकर नीचे लिखे मन्त्रों से वरुण का आमन्त्रण करै ) हाथ जोड़ कर—

ॐ आयाहि भगवन् देव ! तोयमूर्ते जलेश्वर ! ।
शङ्खकुन्देन्दुवर्णाभ ! मकरध्वजपाशधृक् ! ॥
यज्ञेऽस्मिन् सरितोनाथ सर्वपापप्रणाशन ! ।
मयास्मिन् निर्मिते कूपे सान्निध्यमुपकल्पय ॥

इति पठित्वा—ॐ वरुणाय नमः इति गन्धादिभिः वरुणं पूजयेत् । ( उक्त मन्त्र पढ़ कर—अक्षत से 'ॐ वरुणाय नमः' इस वाक्य से वरुण की पञ्चोपचार से पूजा करै )

## [ अथ अनन्तादिनागपूजा ]

अञ्जलिं बद्ध्वा ( हाथ जोड़कर )

ॐ अनन्तो वासुकिश्चैव कर्कोटस्तक्षकस्तथा ।
नागः पद्मो महापद्मः शङ्खः कुलिक एव च ।

इमे चाष्टकुला नागा ये च नागा विषायुधाः।
तान् पूजयाम्यहं भक्त्या रक्षां कुर्वन्तु मे सदा।

इति पठित्वा ॐ अनन्तादिनागा इहागच्छत इह तिष्ठत इत्यावाह्य पाद्यादिपञ्चोपचारैः पूजयेत्।

( इन मन्त्रों को पढ़कर पञ्चोपचार से पूजा करे। यथा—'ॐ अनन्तादिनागा इहागच्छत, इह तिष्ठत' इस प्रकार आवाहन करे। तथा 'एतानि पाद्या० ॐ अनन्तादिनागेभ्यो नमः', इस वाक्य से जल चन्दन, नैवेद्यादि चढ़ावे। )

ततः सविशेषविष्णुपूजा—पाद्यादियज्ञोपवीत-वस्त्रादिभिः कार्या ( नागपूजा के बाद विशेषरूप से यज्ञोपवीत वस्त्रादि से विष्णु भगवान् की पूजा करे, यथा—

तिलानादाय ( हाथ में तिल लेकर )

ॐ भगवन् विष्णो इहागच्छ इह तिष्ठ,

इति आवाह्य ( इस प्रकार आवाहन कर )

शङ्ख या अर्घा में जल लेकर

एतानि पाद्यादीनि एषोऽर्घः ॐ भगवते श्रीविष्णवे नमः ३।

चन्दन लेकर

इदमनुलेपनं ॐ भगवते श्रीविष्णवे नमः ३

यव, तिल लेकर

एते यवतिला ॐ भगवते श्रीविष्णवे नमः ३

 

फूल लेकर

एतानि पुष्पाणि ॐ भगवते श्रीविष्णवे नमः ३।

तुलसीपत्र लेकर

एतानि तुलसीपत्राणि ॐ भगवते श्रीविष्णवे नमः ३

जोड़ा यज्ञोपवीत लेकर

इमे यज्ञोपवीते बृहस्पतिदैवते ॐ भगवते श्रीविष्णवे नमः ।

वस्त्र लेकर

इदं वस्त्रं बृहस्पतिदैवतं ॐ भगवते श्रीविष्णवे नमः ।

नैवेद्य पर तुलसीदल देकर हाथ में जल लेकर

इदं नैवेद्यं ॐ भगवते श्रीविष्णवे नमः ।

जल लेकर

इदमाचमनीयं ॐ भगवते श्रीविष्णवे नमः ।

फूल लेकर

एष पुष्पाञ्जलिः ॐ भगवते श्रीविष्णवे नमः ।

इसके बाद हो सके तो यथा विभव विष्णु के प्रीत्यर्थ शय्या आदि दान करें। ( शय्या आदि दान आवश्यक नहीं है )

ततः कूपे पञ्चरत्नं प्रक्षिप्य, पञ्चगव्येन सिक्त्वा पीतवस्त्रेणाच्छाद्य पाद्यादिपञ्चोपचारैः पूजयेत्

( विष्णुपूजा के बाद कूप में पञ्चरत्न छोड़कर पञ्चगव्य से सिक्त-

करके ऊपर से पीतवस्त्र से आच्छादित करके पाद्य आदि पञ्चोपचार से पूजा करै। यथा—

एतानि पाद्यादीनि एषोऽर्घः ॐ पीतवस्त्राच्छादितकूपजलाशयाय नमः ३।

इदमनुलेपनं०,····इदमक्षतम्०,····इदं पुष्पम्०,····इदं नैवेद्यम्०,····इदमाचमनीयम्०,····एष पुष्पाञ्जलिः ॐ पीतवस्त्राच्छादितकूपजलाशयाय नमः।

ततः कूपात् जलं समुद्धृत्य पितृदेवादीन् तर्पयेत् (कूपपूजन के बाद-कूप से-जल निकाल करके देव पितृ आदि का नीचे लिखे मन्त्र से तर्पण करै। यथा—

ॐ अद्यैतज्जलमुत्सृष्टं मया वै धर्मचेतसा।
ते सर्वे तृप्तिमायान्तु ये च मे जलकांक्षिणः॥
देवगन्धर्वपतयो भूताः स्थावरजङ्गमाः।
ग्रहनक्षत्रवेतालाः पिशाचाः प्रेतगुह्यकाः॥
गिरिकन्दरदुर्गेषु वनेषु निवसन्ति ये।
अनाथाश्च सनाथाश्च ये नित्यं तोयकांक्षिणः॥
सामान्यमिदमेतेषां समं दत्तं जलं मया॥

इति मन्त्रैर्जलं दत्वा कुशत्रयतिलजलान्यादाय (इन मन्त्रों से जल देकर हाथ में पुनः कुशत्रय तिल और जल लेकर आगे के वाक्य से कूपोत्सर्ग करै, यथा—)

ॐ अद्य अमुके मासि, अमुके पक्षे, अमुके तिथौ, अमुकगोत्रस्य ❀ अमुकशर्मणः† मम सर्वपापक्षयपूर्वकविष्णुलोकगमनागमनानेककल्पावच्छिन्न-स्वर्गलोकवास-तदुत्तर-भूम्यधिकरणक-भूपालत्व-समस्त-पुत्र-पौत्रादि-सन्तति-धन-धान्यादि-समृद्धि-बहु-दिव्याङ्गनाकीर्ण-परमपदप्राप्तिपूर्वकैतज्जलाशयावस्थितजलबिन्दुसमसंख्यकवर्ष-सहस्रावच्छिन्न-स्वर्गवासप्राप्तिकामः‡ इदं कूपजलाशयं पीतवस्त्राच्छादितं वरुणदैवतं सर्वभूतोपयोगित्वेनाहं समुत्सृज्ये ।

हाथ से जल छोड़ै ।

ततो दक्षिणादानम्—( फिर हाथ में तिल कुश जल लेकर दक्षिणा दान करै, यथा— )

ॐ अद्य कृतैतत्कूपजलाशयोत्सर्गकर्मप्रतिष्ठार्थं एतावद्द्रव्यमूल्यकहिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे ।

फिर हाथ जोड़ कर निम्न लिखित मन्त्र पढ़ै ।

ॐ सर्वभूतेभ्य उत्सृष्टं मयैतज्जलमूर्ज्जितम् ।

❀ स्त्री यजमान हो तो गोत्रायाः । † अमुकदेव्याः । ‡ स्त्री यजमान हो तो 'प्राप्तिकामा' इस प्रकार वाक्य जोड़ना ॥

रमन्तां सर्वभूतानि स्नानपानावगाहनैः ॥
सामान्यं सर्वभूतेभ्यो मया दत्तमिदं जलम् ।

पुनः हाथ में जल लेकर

ॐ अत्रावस्थितं जलमपद-द्विपद-चतुष्पदादीनां तृप्तिकामोऽहमुत्सृजामि ।

इस मन्त्र से जलाशय के चारो भाग में जल घूमा कर छोड़े ।

ततः पूजितदेवान् प्रणम्य विसर्जयेत् । (फिर पूजितदेव गणों को प्रणाम कर—हाथ में जल लेकर नीचे लिखे मन्त्र पढ़कर विसर्जन करे । यथा—

ॐ यान्तु देवगणाः सर्वे पूजामादाय याज्ञिकीम् ।
इष्टकामप्रसिद्ध्यर्थं पुनरागमनाय च ॥

ॐ सर्वा देवताः पूजिताःस्थ क्षमध्वम्-स्वस्थानं गच्छत ।

ततः कर्मसाङ्गतासिद्ध्यर्थं भूयसीदक्षिणां दद्यात् । ( फिर कर्म की साङ्गतासिद्ध्यर्थ यथाशक्ति भूयसी दक्षिणा उत्सर्ग करे यथा— )

ॐ अद्य कृतैतत्कूपजलाशयोत्सर्गकर्मणि न्यूनातिरिक्तदोषसमाधानार्थमेतावद्द्रव्यमूल्यकहिरण्यमग्निदैवतं नानानामगोत्रेभ्यो ब्राह्मणेभ्यो

भूयसीं दक्षिणां दातुमहमुत्सृज्ये ।

इस प्रकार भूयसी दक्षिणा अनेक ब्राह्मणों को देना चाहिए ।

ततः कलशस्थजलेनाम्रपल्लवेन यजमानस्याभिषेकः ( इस के बाद कलश से आम्रपल्लवद्वारा जल लेकर यजमान का अभिषेक निम्नलिखित मन्त्र से करे ) यथा—

ॐ सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ।
वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः ॥
प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ।
आखण्डलोऽग्निर्भगवान् यमो वै निर्ऋतिस्तथा ॥
वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ।
ब्रह्मणा सहितः शेषो दिक्पालाः पान्तु ते सदा ॥
कीर्तिर्लक्ष्मीर्धृतिर्मेधा श्रद्धा पुष्टिः क्रिया मतिः ।
बुद्धिर्लज्जावपुः शान्तिस्तुष्टिः कान्तिश्च मातरः ।
एतास्त्वामभिषिञ्चन्तु देवपत्न्यस्समागताः ।
आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः ॥
ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः ।
देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ॥
ऋषयो मानवो गावो देवमातर एव च ।

देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ॥
अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च ।
औषधानि च रत्नानि कलशस्यावयवाश्च ये ॥
सहिताः सागराः शैलास्तीर्थानि जलदा नदाः ।
एते त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये ॥
ॐ शान्तिः शान्तिः शान्तिः ॥

ततो यथाशक्ति त्र्यधिकान् ब्राह्मणान् भोजयित्वा दक्षिणाञ्च दद्यात् ( इस प्रकार यजमान के अभिषेक बाद यथाशक्ति ३ से अधिक ब्राह्मणों को भोजन कराकर दक्षिणा प्रदान करें )

इति-कूपजलाशयोत्सर्गपद्धतिः समाप्ता ।

---

पुस्तकप्राप्तिस्थानम्—
मास्टर खेलाड़ीलाल ऐण्ड सन्स
संस्कृत बुकडिपो,
कचौड़ीगली, बनारस–१

## ❀ पं० श्रीसीताराम झा कृत मैथिलग्रन्थ ❀

| | |
|---|---|
| अतीचार निर्णय | =) |
| अलङ्कारदर्पण—भाग १ | ≡) |
| अलङ्कारदर्पण—भाग २ | ॥=) |
| उनटा बसात | =) |
| एकोद्दिष्टपद्धति—छान्दोग्य-वाजसनेयी भा० टी० | ।) |
| गीता—अ० १-६ मैथिलीपद्यात्मक | ।=) |
| जतरा सगुन-विचार | ≡) |
| पद्धुआचरित्र तथा पूर्वापर व्यवहार | =) |
| कृत्यविधि-सहित पर्वनिर्णय | यंत्रस्थ |
| मनमोहन लड्डू | ≡) |
| मैथिली परिचय दर्पण | =) |
| रामायणी शिक्षा—पं० बलदेवमिश्र कृत | १) |
| शतरुद्रियपद्धति—स्व० चन्द्रधर कृत | ॥=) |
| सूक्तिसुधा—प्रथमविन्दु ( काव्य संग्रह ) | ।) |
| ,, —द्वितीयविन्दु ( लोक लक्षण ) | ≡) |
| ,, —तृतीयविन्दु ( उपदेशाक्षमाला ) | ≡) |
| ,, —चतुर्थविन्दु ( भूकम्पवर्णन ) | ≡) |
| ,, —पञ्चमविन्दु ( शिक्षासुधा प्रथम० ) | ≡) |
| परिचय दर्पण | =) |


पुस्तक प्राप्तिस्थान—

मास्टर खेलाड़ीलाल ऐण्ड सन्स

संस्कृत बुकडिपो,

कचौड़ीगली, बनारस—१